

# श्रीगौडपादकारिका-समालोचनम्

काशीस्थ श्री जोखीराम मटरूमल गोयनका संस्कृत
महाविद्यालयस्य भूतपूर्वाध्यक्षेण ( प्रिन्सपल )
मन्त्रिणा च

काशीविद्वन्मण्डलमण्डन सर्वतन्त्रस्वतन्त्र पण्डितप्रवर
श्री चण्डीप्रसादशुक्लशर्म्मणा विरचितम्

तेनैव प्रकाशितं च







# श्रीगौडपादकारिकासमालोचनम् ।

चितिरूपेण या कृत्स्नमेतद्व्याप्य स्थिता जगत् ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमोनमः ॥

## माण्डूक्योपनिषदोऽपौरुषेयत्वम् ।

अथ "नवधाऽथर्वणः" इतिव्याकरणमहाभाष्यप्रमाणात् (निर्णयसागर प्रेस मुद्रित १ अ० १ पा० ६५ पृ०) नवशाखात्मकस्य अथर्ववेदस्य अन्यतमा शाखा माण्डूक्यशाखा, दुर्दैवपरिपाकात् तस्याः संहिताभागो ब्राह्मणभागो वा साम्प्रतं नोपलभ्यते । केवलं द्वादशमन्त्रात्मकमुपनिषन्मात्रमुपलभ्यते यत् माण्डूक्योपनिषदित्यभिधीयते ।

मण्डूको नाम मन्त्रद्रष्टा कश्चिद् ऋषिरनादिः, अनादय एव सर्वे मन्त्रद्रष्टार ऋषयः । न हि गाधिनन्दनात् विश्वामित्रात्पूर्वं गायत्रीमन्त्रो नासीदिति वक्तुं शक्यते । अन्यथा गाधेः विश्वामित्रपितुः उपनयनसंस्कारे गायत्र्युपदेशो नासीदित्यापद्येत । वेदस्यापौरुषेयत्वं च व्याहन्येत । मण्डूकस्य गोत्राऽपत्यं माण्डूकः "ढक् च मण्डूकात्" (अष्टाध्यायी ४।१।११९) इत्यण् स एव माण्डूक्यः, चतुर्वर्णादेराकृतिगणत्वात् "ब्राह्मणादिषु चतुर्वर्णादीनामुपसंख्यानम्" (महाभाष्य ५ अ० १ पा० १ २४ सू०) इति "ष्यञ्" यथा "अनृष्यानन्तर्ये बिदादिभ्योऽञ्" (अ० ४।१।१०४) इत्यत्र अनन्तरशब्दात् ष्यञ् । माण्डूक्यस्य मन्त्रद्रष्टृऋषित्वे प्रमाणञ्च—'जायन्तीपुत्रो

माण्डूकायनीपुत्रात्, माण्डूकायनीपुत्रो माण्डूकीपुत्रात् माण्डूकीपुत्रः शाण्डिलीपुत्रात्,' ( बृ० ६।५।२ ) इति बृहदारण्यकवंशब्राह्मणवचनम् । तेन प्रोक्ता उपनिषद् माण्डूक्योपनिषद् । प्रोक्तत्वं न हि बुद्धिपूर्वकनिर्मातृत्वम् अपितु प्रवचनकर्तृत्वम् । "शिवाद्या ऋषिपर्यन्ताः स्मर्त्तारोऽस्य न कारकाः" इति वचनात् । 'आख्याप्रवचनात्' (मी० सू० १।१।३०) इति न्यायाच्च१ । प्रवचनम् = अध्यापनम् । यथा हि क्रौञ्चमिथुनादेकं व्याधशराघातेन मृतं दृष्ट्वा कारुण्याप्लुचेतसो महात्मनो वाल्मीकेर्मुखात् स्वयमन्तर्यामिप्रेरणया "मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः । यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्" इतिवचनमाविर्बभूव । तथा समाहितचेतसां महर्षीणां चेतस्सु स्वयमन्तर्यामिप्रेरणया मन्त्रा आविर्बभूवुरिति यस्य महर्षेश्चेतसि यो मन्त्रः प्रादुर्बभूव स तस्य द्रष्टा ऋषिरिति ऋषयो मन्त्रद्रष्टारः इति वचनात् । अस्या उपनिषदो मुक्तिकोपनिषदि १।२६।२९ मन्त्रैः इयमेव मुमुक्षुभि-

---

(१) वेदशाखासु काठकमित्यादिका आख्या यदि कठस्य कर्तृत्वं विनानुपपन्ना स्यात् तदा स्वोपपत्तये कठस्य कर्तृत्वं कल्पयेत् न त्वियमनुपपन्ना कठप्रवचनादपि काठकमित्याख्याया उपपत्तेः न च यथा कठः तस्याः शाखायाः प्रवचनं कृतवान् तथाऽन्योऽपि कर्तुं प्रभवतीति नेदमसाधारणं निमित्तं काठकमित्याख्यायां कर्तृत्वं च असाधारणमिति युज्यते तेन काठकमिति अख्याकारणमिति वाच्यम् प्रकर्षेण वचनमनन्यसाधारणं कठादिभिरनुष्ठितमिति असाधारणतया प्रवचनादपि काठकमित्याख्योपपत्तेः तदुक्तं शाबरभाष्ये "स्मर्यते च वैशम्पायनः सर्वशाखाध्यायी कठः पुनरिमां केवल शाखामध्यापयांबभूवेति स बहुशाखाध्यायिनां सन्निधावेकशाखाध्यायी अन्यां शाखामनधीयानस्तस्यां प्रकृष्टत्वादसाधारणमुपपद्यते विशेषणम्" इति ।

रुपादेया मोक्षदाने समर्था इति बहुप्रशंसा कृता ! अस्याश्चादिमाः सप्त मन्त्रा नृसिंहतापिन्यां रामतापिन्याञ्चोपलभ्यन्ते ।

## माण्डूक्योपनिषदो विषयविवेचनम्

अस्यां च माण्डूक्योपनिषदि द्वादश मन्त्राः सन्ति । तत्र प्रथमे मन्त्रे चित्तशुद्धये उपास्यस्य प्रणवस्य सर्वात्मकता प्रदर्शिता । द्वितीये च ब्रह्मणः शुद्धचिद्रूपस्य सर्वात्मकता वर्णिता । सा च ब्रह्मणः सर्वात्मकता दुग्धदधिवत् न परिणामवादमाश्रित्य, निरवयवे कूटस्थे ब्रह्मणि तदभावात् । किन्तु-रज्जु-सर्पवत् विवर्तवादमाश्रित्येति वैशेषिकादिमते निरवयवेऽपिआकाशे नीलं नभ इति मालिन्यादिविवर्त ( भ्रम ) दर्शनात् । अन्ते आत्मनश्चतुष्पात्त्वं च प्रतिज्ञातम् । ततश्चतुर्भिः ३ । ४ । ५ । ६ । मन्त्रैः अध्यारोपापवादाभ्यां निष्प्रपञ्चः ( आत्मा ) प्रपञ्च्यते इति रीतिमनुसृत्य विश्ववैश्वानरयोः तैजसहिरण्यगर्भयोः प्राज्ञाव्याकृतयोः व्यष्टिसमष्टिरूपयोः तुरीये चिद्रूपे आरोपः कृतः । सप्तमेन च "नान्तः प्रज्ञम्" इति मन्त्रेण विश्वादीनामपवादेन तुरीयोऽवशेषितः । यथाहि यदा कश्चित् अज्ञानवशात् सर्परूपेण विवर्तितां रज्जुं पश्यति, तदा बिभेति, पलायते नाना दुखानि चानुभवति । यदा-शुभकर्मोदयात् केनचित्कारुणिकेन "नाऽयं सर्पः" इति प्रतिबोधितो भवति तदा निषेधविज्ञानप्रमाणसमकालमेव सर्पो निवर्त्तते तथा-यदा सच्चिदानन्दघने स्वात्मनि अहं प्राज्ञः = सुषुप्तः = आनन्दभुक्, स्वप्नगतः तैजसः = प्रविविक्तभुक्, जाग्रत् = विश्वः स्थूलभुक् इति अज्ञानवशात्समारोपयति तदा आध्यात्मिकाधिदैविकाधिभौतिकानि त्रिविधानि दुःखानि अनुभवति यदा च पुण्यपुञ्जपरिपाकात् केनचित् ज्ञानिना करुणायशंवदेन स्वं "नान्तःप्रज्ञो न बहिष्प्रज्ञः न प्रज्ञानघन

किन्तु शिवोऽद्वैतस्तुरीय आत्मा इति प्रतिबोधितो भवति, तदा निषेधविज्ञानप्रमाणसमकालमेव स्वकारणभूताज्ञानेन सह अन्तःप्रज्ञत्वादिदुःखव्रातं निवर्तते तुरीये स्वात्मनि-चावतिष्ठते। तदेतद्वक्ष्यति—

"अनिश्चिता यथा रज्जुरन्धकारे विकल्पिता।
सर्पधारादिभिर्भावैः तद्वदात्मा विकल्पितः॥
निश्चतायां यथा रज्ज्वां विकल्पो विनिवर्त्तते।
रज्जुरेवेति चाद्वैतं तद्वदात्मविनिश्चयः॥

इति (वै० प्र० १७·१८) गौडपादकारिकाभ्याम्। इदं निवृत्तिवचनं व्यवहारदृष्ट्या, परमार्थदृष्ट्या तु "प्रपञ्चो यदि विद्येत निवर्त्तेत न संशयः। इति (आगम प्र० १७) कारिकया निवृत्तेरप्यभावमजातवादं वक्ष्यति। ये तु विशुद्धचित्ता उत्तमाधिकारिणः तेषां कृते नान्तःप्रज्ञ इत्यादिमुख्योपदेशः, ये तु-मध्यमाधिकारिणः तेषां चित्तविशुद्धये क्रममुक्तये च प्रणवस्य मात्राणाम् अकारोकारमकारतुरीयाणाम् आत्मनो ब्रह्मणः पादैर्विश्वतैजसप्राज्ञतुरीयैः व्यष्टिभिः समष्टिभिश्च वैश्वानरहिरण्यगर्भेश्वरतुरीयैरभेदभावना चतुर्भिः ८। ९। १०। ११ मन्त्रैरुपदिष्टा। १२ द्वादशेन मन्त्रेण च प्रणवोपासनाफलमुक्तम्।

इयञ्च—प्रसिद्धासु ईशादिदशोपनिषत्सु अन्तर्गता स्वल्पकायापि गम्भीरार्था इति शास्त्रमेव—स्वरूपावस्थानरूपमोक्षप्रयोजनसम्बद्धानां त्वंतत्पदार्थतदैक्यप्रणवोपासनारूपसाधनविरोधपरिहाराणामशेषार्थानामत्र प्रतिपादनात्। शास्त्रलक्षणं हि—एकप्रयोजनोपनिबद्धाऽशेषार्थप्रतिपादकस्त्रम्। इति। अस्या उपनिषदः स्वस्वरूपे तुरीयेऽवस्थानं मोक्षः प्रयोजनम्। प्रणवो-

पासनया शुद्धचित्तोऽधिकारी, सम्बन्धश्च—विषयेण ब्रह्मणा तुरीयेण सह-प्रतिपाद्यप्रतिपादकभावः, मोक्षेण च सह साध्यसाधनभावः, अतोऽवश्य-व्याख्येयेति हेतोः अत्र भवद्भिः श्रीगौडपादाचार्यैर्व्याख्याता।

## गौडपादकारिकाविषयविवेचनम्।

अत्र गौडपादकारिकाभिधे व्याख्याने चत्वारि प्रकरणानि सन्ति। तत्र प्रथमे आगमाख्ये एकोनत्रिंशत् (२९), द्वितीये वैतथ्याख्येऽष्टात्रिंशत् तृतीयेऽद्वैताख्ये अष्टाचत्वारिंशत् (४८), चतुर्थेऽलातशान्तौ शतं कारिकाः सन्ति। एवं मिलित्वा पञ्चदशाधिकशतद्वयी (२१५) कारिकाणामस्ति। तत्र प्रथमं प्रकरणम्—आगमाख्यं माण्डूक्योपनिषदो भावार्थरूपमिति आगममूलकत्वात् तस्यागमप्रकरणमिति नाम। अत एव "जागरितस्थान" इत्यादि चतुर्णाम्मन्त्राणामग्रे तद्भावार्थभूतानां 'वहिष्प्रज्ञ' इत्यादीनां नवानां कारिकाणामुपन्यासोऽस्ति। "नान्तः प्रज्ञम्" इत्यस्य मन्त्रस्य भावार्थभूतानां "निवृत्तेः सर्व" इत्यादीनां नवानां कारिकाणां तदग्रे उपन्यासः। "तथा जागरितस्थानो वैश्वानर" इत्यादीनां त्रयाणां भावार्थभूतानां "विश्वस्यात्वविवक्षायामि"ति पञ्चानाम्, तथा द्वादशमन्त्रस्य भावार्थानां पण्णामन्ते उपन्यासः।

## आगमप्रकरणस्थकारिकाणां उपनिषदंशभिन्नत्वम्।

यत्तु—द्वैतिनो माध्वादयो वदन्ति, 'आगमप्रकरणस्थाः कारिका अपि उपनिषदंशभूता' इति। इदंहि तेषामाकूतम्—प्रश्नोपनिषदि यथा "अथो-त्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्याऽऽदित्यमभिजयन्ते" (प्रश्नो० १ ख० १० श्लोक) इत्यादि गद्यांशस्याग्रे तदेव श्लोक

इति प्रतिज्ञाय "पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्द्धे पुरीषिणम्" इति "अथेमे अन्य उ परे विचक्षणं सप्तचक्रे षडर आहुरर्पितमिति" ( प्रश्नो० प्रथम खं० ११ श्लोक ) उक्तौ उभावप्यंशावुपनिषदंशभूतौ तथा माण्डूक्योपनिषद्यपि "जागरितस्थान" इति गद्यांशस्याग्रे भवन्ति चात्र श्लोका इति प्रतिज्ञाय "बहिष्प्रज्ञः" इत्यादि उक्तेष्वप्युभावप्यंशौ उपनिषदंशभूतावेवेति । एवं तैत्तिरीयादिदृष्टान्तोप्यत्र बोध्यः ।

तन्न वरम्, भाषाभेदात्, प्रतिपादनशैलीभेदाच्च । तथाहि—वैदिके हि सन्दर्भे छन्दोभङ्गः, क्लिष्टत्वम्, अश्लीलत्वम्, एवं प्रभृतयो दोषाः प्रायो न गण्यन्ते । लौकिके च सन्दर्भे इमे दोषा गण्यन्ते । तथाहि—प्रश्नोपनिषदि यथा गद्यांशे आदित्यं प्राप्नुवन्ति इत्यस्य स्थाने "आदित्यमभिजयन्ते" इत्युक्तिः आत्मानमादित्यरूपेण ध्यात्वा इत्यस्य स्थाने आत्मानमन्विष्येत्युक्तिः अरा इव रथनाभौ यस्मिन् ( आदित्ये ) विश्वम्प्रतिष्ठितम्" इत्यस्य स्थाने सप्तचक्रे षडर आहुरर्पितमित्युक्तिश्च क्लिष्टा । तथा पद्यांशेऽपि छन्दोभङ्गः 'उदकवन्तमित्यस्य स्थाने पुरीषिणमित्युक्तिः अश्लीला नेयार्था च ।" किञ्च—द्वितीयवाक्यघटकस्य "परे" इत्यस्य तृतीयवाक्ये समन्वये क्लिष्टकल्पना । माण्डूक्योपनिषदि च यथा-गद्यांशे क्लिष्टत्वादिकं न तथा पद्यांशे । अतो गद्यांशः वैदिकः श्लोकांशस्तु लौकिक इति युक्तं प्रतिभाति ।

## डाक्टरवालेसरमतखण्डनम्

यदपि—गौडपादकारिकाविषये यूरोपनिवासिषु अन्वेषणशीलेषु इङ्ग-

लिशविद्वत्सु तथा तदनुयायिषु भारतीयेङ्गलिशविद्वत्सु च मध्ये एकः डा० वाकेसरमहोदयः—(Der Aeltere Vedanta, pp. 5,ec,)

१कार्यकारणवद्धौ ताविष्येते विश्वतैजसौ ।
प्राज्ञः कारणबद्धस्तु द्वौ तौ तुर्य्ये न सिध्यतः॥
२अन्यथागृह्णतस्स्वप्नो निद्रातत्त्वमजानतः।
विपर्यासे तयोः क्षीणे तुरीयं पदमश्नुते ॥

इति गौडपादीये—कारिके, भगवत्पादश्रीशाङ्कराचार्यीयं—

३सुपुप्ताख्यं तमो ज्ञानं बीजं स्वप्नप्रबोधयोः ।
आत्मबोधप्रदग्धं स्याद् बीजं दग्धं यथाऽभवम् ।।

इति उपदेशसाहस्रीस्थं वचनं च निर्दिश्य, "एवं गौडैर्द्राविडैर्नः

---

(१) टिप्पणी—कार्यकारणबद्धाविति । कार्याणि शरीरेन्द्रियान्तः करणानि, कारणमज्ञानं, ताभ्यां जागरितस्थानः विश्वः स्वप्नस्थानः तैजसश्चेत्युभौ बद्धौ प्राज्ञः सुपुप्तस्थानः कारणेनाज्ञानेन बद्धः । तौ द्वौ कार्यकारणबन्धौ तुर्ये न सिध्यतः न विद्येते ।

( २ ) अन्यथा गृह्णत इति । अन्यथा = अन्यस्य वस्तुनः अन्यरूपेण गृह्णतः = जानतः स्वप्नो भवति । तद्द्वये विपर्यासे क्षीणे सति तुरीयं पदमश्नुते = प्राप्नोति ।

(३) सुपुप्ताख्यमिति । सुपुप्तिः आख्या यस्य तत् तमः = तम इवावरकं स्वप्नप्रबोधयोः यद्बीजम् = कारणमज्ञानम्, तद्—आत्मबोधप्रदग्धं सत् अभवम् = भवः = उत्पत्तिः = तत्र असमर्थं स्यात् यथा बीजं यवादिदग्धं सत् अभवं भवति ।

पूज्यैरर्थः प्रकाशितः" इति नैष्कर्म्यसिद्धिकृतां ( ४।४१।४४ ) लेखे बहुवचननिर्देशं दृष्ट्वा "गौडपाद इति नैका व्यक्तिः, अपि तु सम्प्रदायः द्वादशमन्त्रात्मिकोपनिषदपि तत्कृतैव नतु अनादिश्रुतिः इति" अभ्यूहितवान् तथा "नः" इत्यत्र विसर्गमदृष्ट्वा नञम्मत्वा अयमर्थो गौडानामभिमतः, न तु द्राविडानामिति मतभेदं च निश्चितवान् इति ।

तत्र वेङ्कटसुब्रायपण्डितः—( Indian Antipuary, October, 1933, pp. 192-3 ) "एकत्वं च न दातव्यं गुरावात्मनि चेश्वरे" इत्यभियुक्तरीतिमनुसृत्य गौडैर्द्राविडैरिति बहुवचनोपपत्तिं कृत्वा व्यक्तिपरत्वं निश्चितवान् । तथा 'न' इत्यत्र विसर्गं दृष्ट्वा नः = अस्माकं पूज्यैर्गौडैः = गौडपादाचार्यैः, द्राविडैः = शङ्कराचार्यैरुक्तोऽर्थः प्रकाशितः इत्यर्थं मत्वा द्वयोरैकमत्यं निश्चतवान् ।

युक्तं चैतत्, डा० वालेसरमहोदयेन "उक्तार्थस्य द्रढिम्ने उदाहरणमाह" इति एतेषां निर्दिष्टश्लोकानां नैष्कर्म्यसिद्धीयस्योपक्रमणग्रन्थस्यानालोचनात्, गौडद्राविडयोर्मतभेदे उभयप्रोक्तवचनानामुक्तार्थद्रढिमहेतुत्वायोगात् । किञ्च-उपनिषदां भपाभेदात् प्रतिपादनशैलीभेदाच्च न कथमपि गौडपादकृतत्वं सम्भवतीतिप्रागुक्तं न विस्मर्तव्यम् ।

ननु कोऽर्थः पूर्वोक्तः य एभिर्वचनैः प्रकाश्यत इति चेदुच्यते—तत्र हि"यद् वै तन्न पश्यति पश्यन् (१) वै तन्न पश्यति, न हि द्रष्टुर्दृष्टेर्विपरिलोपो वर्त्ततेऽविनाशित्वात् न हि ततोऽन्यद्विभक्तं किञ्चिदस्ति

( १ ) टिप्पणी । पश्यन्निति । यत् तत् = दृश्यं न पश्यति = न प्रकाशयति तत् पश्यन् = नित्यचिद्रूपः सन् न पश्यति = न प्रकाशयति । दृष्टेः = दृग्रूपस्य द्रष्टुः = आत्मनः विपरिलोपः विनाशः न विद्यते = अवि

यत्पश्येत्" इति श्रुतिमनुरुध्य "१पश्यन्निति यदाहोच्चैः प्रत्यक्त्वमजमद्वयम् । अपूर्वानपरानन्तं त्वमा तदुपलक्ष्यते, ( नैष्कर्म्यसिद्धौ अध्याय ४ । ३९ ) इति कारिकया यदि सुषुप्तिकाले अनायासेन निर्विशेषं ब्रह्म सम्पन्नो भवति जीवस्तदा कृतं तत्त्वमस्यादिवाक्योत्थविज्ञानेनेत्याशङ्क्य 'अस्माद् यदपर २ रूपं नास्तीत्येव निरूप्यते । अन्यथाग्रहणाभावाद् बीजं तत्स्वप्नबोधयोः' ( नै० अध्याय ४।४०। ) इति कारिकया 'जगद्बीज-

---

नाशित्वात् नित्यत्वात् । कुतस्तर्हि स्वप्ने न पश्यतीति जिज्ञासायामाह न हीत्यादि । ततः चिद्रूपादात्मनः विभक्तमन्यत् नहि विद्यते यत्पश्येत् = प्रकाशयेत् । 'सुषुप्तिकाले सकले विलीने' इतिश्रुतेरित्यर्थः ।

( १ ) पश्यन्निति श्रुतिमवलम्ब्य शङ्कते पश्यन्निति यदाहोच्चैरिति । श्रुतौ पश्यन्नित्यंशः 'अपूर्वानपरानन्तं प्रत्यक्त्वम् = प्रत्यक् अजम् = अव्ययम् तत् = उच्चैः आह यत् तत्त्वमसीतिवाक्ये त्वमा = त्वमिति गिरा उपलक्ष्यते भागत्यागेन लक्ष्यते । एतेन सुषुप्तौ अनायासेन ब्रह्मप्राप्तौ श्रवणमनन निदिध्यासनादिकं वृथेति शङ्कते -अत्र श्लोके यत्तदोः व्यत्यासेनान्वयः कार्यः ।

( २ ) अस्माद् यदपरं रूपमिति-श्रुतौ नहि ततोऽन्यद्विभक्तमित्यत्र नेति गिरा अस्मादज्ञानात् यदन्यद्रूपं मूर्त्तञ्चामूर्त्तञ्च "द्वे वाव ब्रह्मणो रूपे मूर्त्तञ्चामूर्त्तञ्च" इति श्रुतेः । तदेवोच्यते "अन्यथाग्रहणाभावः स्वप्नप्रबोधयोः यद्बीजं तन्नोच्यते । एतेन श्लोकेन सुषुप्तौ अज्ञानस्य सत्त्वात् न ब्रह्मसम्पत्तिर्भवति । तद्विनाशार्थं श्रवणादिकमवश्यमनुष्ठेयमिति । अत्र श्लोके तृतीयपादः "नान्यथाग्रहणाभावः" इति पाठनीयः । यथाश्रुते अर्थानवबोधात् ।

मज्ञानं सुषुप्तावपि तिष्ठतीति समाधानमुक्त्वा तस्य समाधानस्य 'कार्यकारणबद्धौ तौ, इत्यादिकारिकाभिर्द्रढिमा समर्थितः ।

वस्तुतस्तु—'श्रीगौडपादाचार्याः पूज्यपादश्रीशङ्कराचार्यगुरवः' इति प्रसिद्धेस्तथा 'श्रीबदरिकाश्रमं गत्वा श्रीमन्तं भगवन्तं नारायणं प्रसाद्य माण्डूक्योपनिषदर्थाविष्कारसमर्थां बुद्धिं प्राप्य इमाः कारिका व्यररचन्, इति चाद्वैतवेदान्तपण्डितसमाजप्रसिद्धे श्चैकैवेयं व्यक्तिर्गौडपादाचार्यः न सम्प्रदायः, "नह्यमूला जनश्रुतिः" इत्यभियुक्तोक्तेरुक्तप्रसिद्धेः प्रामाण्य सन्देहानवसरादिति नाविदितं पण्डितानाम् ।

## वेदान्तबौद्धदर्शनयोर्वैलक्षण्यम्—

यत्तु—भेदवादिनो माध्वादयः इदानीन्तनाश्चान्वेषणशीला विद्वांसः गौडपादाभिधे कारिकाग्रन्थे बुद्धसंवृतिधर्माग्रयाणादिशब्दानां बौद्धदर्शनप्रसिद्धानां परमार्थद्रष्टृविद्या, जीव, मुख्यप्रमाणादिष्वर्थेषु प्रयुक्तत्वात् बौद्धदर्शनव्यवहृतचतुष्कोट्यादिशब्दानां कतिपयकारिकाऽऽनुपूर्वीणां च साम्यदर्शनाच्चाद्वैतबौद्धदर्शनयोरैक्यं लपन्ति ।

तदप्यापातरमणीयम् । तथाहि—योगाचारस्य क्षणिकविज्ञानवादिनो मतेन सह स्वमतभेदस्य—

१"क्रमते न हि बुद्धस्य ज्ञानं धर्मेषु तापिनः ।

(१) टि० तापिनः—तपस्विनः, बुद्धस्य "असङ्गो ह्ययं पुरुष" इति मन्त्रद्रष्टुः ऋषेः ज्ञानम् = बुद्धिः धर्मेषु = बाह्याध्यात्मिकदृश्येषु न क्रमते = न संसृजति । दृश्यानां शुक्तिरजतवदसत्त्वात् । सर्वे धर्माः = जीवास्तथा बुद्धिवत् विषयसंसर्गशून्यज्ञानवन्तः, एतज्ज्ञानम् = विषयसंसर्गशून्यं

सर्वे धर्मास्तथा ज्ञानं नैतद् बुद्धेन भाषितम् ॥

इति (मा० अलात प्र० ९९) कारिकायां स्वयमेवाचार्यैः स्पष्टम्प्रतिपादनात्। तथा शून्यवादिमाध्यमिकसिद्धान्तेन सहापि स्वमतभेदस्य–

२"सतो हि मायया जन्म युज्यते न तु तत्त्वतः।
तत्त्वतो जायते यस्य जातं तस्य हि जायते ॥
३असतो मायया जन्म तत्त्वतो नैव युज्यते ।
वन्ध्यापुत्रो न तत्त्वेन मायया वापि जायते ॥

इति (मा० का अद्वैत प्र० २७-२८) कारिकाभ्यां सतोब्रह्मणो विवर्त्तवादमाश्रित्य जगज्जन्मनः सम्भवस्य, तथा—निरधिष्ठानभ्रमासम्भवेन वन्ध्यापुत्रदृष्टान्तेन असतो जगतो जन्मासम्भवस्य च प्रदर्शनेनाऽऽआचार्यचरणैः स्पष्टम्प्रतिपादनात्।

---

ज्ञानं बुद्धेन = तथागतेन न भाषितम् = न कथितम्। तेन अर्थस्य ज्ञानाकारत्वप्रतिपादनात्।

( २ ) सत इति। सतः कूटस्थनित्यस्य ब्रह्मणः शुक्तेरिव मायया अज्ञानाज्जन्म जगद्रूपेण रजतवद् दर्शनं युज्यते। न तु तत्त्वतः = परमार्थतः। निरवयवस्य इन्द्रियायोग्यस्य दर्शनायोगात्। यस्य परिणामवादिनः बौधायनादेर्मिते दुग्धदधिन्यायेन तत्त्वतः = परमार्थतः सद् ब्रह्म जगदाकारेण जायते = परिणमते तस्य मते परिणामित्वेनानित्यत्वाज्जातमेव ब्रह्म जायत इत्युक्तं भवति। तच्च न सम्यक्। "जाताच्च जायमानस्य न व्यवस्था कथञ्चन" इति वक्ष्यमाणरीत्याऽनवस्थाप्रसङ्गात्।

( ३ ) असतः = शून्यस्य मायया वा तत्त्वतो वा जन्मदर्शनं न युज्यते अन्यथा वन्ध्यापुत्रोऽपि कदाचिद् दृश्येत इति।

यद्यपि

"अस्ति नास्त्यस्तिनास्तीति नास्तिनास्तीति वा पुनः।
चलस्थिरोभयाभावैरावृणोत्येव बालिशः ॥
'कोट्यश्चतस्र एतास्तु ग्रहैर्यासां सदाऽऽवृतः।
भगवानाभिरस्पृष्टो येन दृष्टः स सर्वदृक् ॥

इति (मा० का० अलातप्र० ८३-८४) कारिकयोः तथा शून्यतावादिमतप्रतिपादिकायाः—

'न सन्नासन्न सदसत् न चाप्यनुभवात्मकम्।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः ॥

इति कारिकायाश्चैकार्थकत्वकथनम्—तदपि एतत्प्रकरणस्थस्य चलस्थिरोभयाभावैरिति विशेषणस्य एतद्व्याख्यानभूतभाष्यादिग्रन्थस्य चानालोचननिबन्धनम्। तथाहि—

१अजमनिद्रमस्वप्नं प्रभातं भवति स्वयम्।
सकृद्विभातो ह्येवैष धर्मो धातुस्वभावतः ॥
सुखमाव्रियते२ नित्यं दुःखं विव्रियते सदा।

---

( १ ) टि० अजमिति । कूटस्थनित्यं ब्रह्म अजम् = जन्मरहितम्, निद्रा-तत्त्वाग्रहणरूपा तया रहितं, स्वप्नः अन्यथाग्रहणरूपस्तेनापि रहितम्, स्वयं विभातम् = स्वप्रकाशम्, एष धर्म आत्मा धातुस्वभावतः = वस्तुस्वभावतः सकृद्विभातः = नित्यप्रकाशरूप इति ।

( २ ) सत्यं ज्ञानमानन्दं ब्रह्मेति श्रुतेः यद्यात्मा सुखरूपः तदा सुखरूपेण कथं न गृह्यत इत्याशङ्क्याह—सुखमाव्रियत इति । असौ भगवान् आत्मा वक्ष्यमाणासु चतसृषु कोटीषु मध्ये यस्य कस्य चैकस्य

यस्य कस्य च धर्मस्य ग्रहेण भगवानसौ ॥

( मा० का० अ॰शा॰ प्र० ८१-८२ ) इति कारिकाभ्यां नित्यस्वप्रकाशरूप आत्मा प्रकृतः स च चलस्थिरोभयाभावैः-अस्ति, नास्ति, अस्तिनास्तीति, 'नास्ति नास्तीति वा कोटिचतुष्टयैरावृतत्वात्सुखरूपेण न गृह्यते, किन्तु दुःखरूपेण गृह्यते ।

तदेतत्-अस्ति नास्तीत्यादि वचनं भाष्ये एवं विवृतम् । प्रमाता देहादिव्यतिरिक्त आत्माऽस्तीति वैशेषिकादिपक्षः प्रथमा चलकोटिः, तैः आत्मगुणस्य विज्ञानस्य क्षणिकस्य स्वीकारेण विज्ञानवत्त्वेनात्मनः प्रतिक्षणं चलत्वात् । देहादिव्यतिरिक्तोऽपि नास्ति विज्ञानगुणकः आत्मा किन्तु क्षणिकविज्ञानरूपः क्षणिकस्य विज्ञानस्यैवात्मत्वादिति विज्ञानवादिपक्षः द्वितीया स्थिरकोटिः, तैः विज्ञानस्य क्षणिकस्य स्वक्षणे स्थिरस्यैवात्मत्वेन स्वीकारात् । अस्ति नास्ति इत्युभयात्मक आत्मेति दिगम्बरपक्षः तृतीया कोटिः—तैः आत्मनः ज्ञानेन=स्वगुणेन सह भेदाभेदयोः स्वीकारेण ज्ञानगुणवत्त्वेनात्मनश्चलत्वं तथा ज्ञानस्य क्षणिकत्वेन स्वक्षणे स्थिरत्वमिति चलस्थिरोभयरूप आत्मा स्वीक्रियत इति। नास्ति नास्तीति वीप्सायां द्वित्वं तेनात्मनोऽत्यन्ताभावः शून्यवादिनो माध्यमिकस्य पक्षः चतुर्थी कोटिः, ताभिश्चतसृभिः

---

धर्मस्य चलादिरूपस्य ग्रहेण आग्रहेण सुखम्=सुखरूपेण आव्रियते आवृतो भवति । तथा दुःखम्=दुःखरूपेण विव्रियते=प्रकाशितो भवति । अत्र 'सुखमाव्रियते' इत्यत्र सुखेनेति पाठः सम्यक् प्रतिभाति । 'दुःखं विव्रियते' इत्यत्रापि दुःखैर्विव्रियते इति पाठः सम्यक् प्रतिभाति ।

कोटिभिरस्पृष्टो नित्यः शुद्धबुद्धमुक्तस्वरूपो वेदान्ताभिमत आत्मा येन दृष्टः स सर्वदृग् इति ।

उक्तमाध्यमिककारिकायाश्च तत्त्वम् = सर्वमेव बाह्यम्, आध्यात्मिकं च वस्तु न सत् निर्वक्तुमशक्यत्वात् नासत्, प्रतीयमानत्वात्, न सदसत् विरोधात्, नाप्युभयभिन्नम् अनुभवागोचरत्वात्, इति सर्वमुक्तचतुष्कोटिविनिर्मुक्तमिति अनिर्वचनीयं मिथ्येत्यर्थः । इति तयोर्महति भेदे जागरूके चतुष्कोटिशब्दस्य उभयत्र कारिकयोः सत्त्वमात्रेणा भेदाभिधानं साहसमात्रम् ।

ननु आस्तिकनास्तिकानां द्वादशदर्शनानि सन्ति । तत्र द्वादशसु कोटीषु सम्भवन्तीषु चतस्रः कोट्यः आचार्यपादैः कथमुक्ता इति चेत्सत्यम् । बाह्याध्यात्मिकेषु आत्मव्यतिरिक्तेषु पदार्थेषु द्वादशदर्शनानां मतभेदेऽपि आत्मविषये चतसृणां कोटीनामेव सम्भवः । तथाहि-सौत्रान्तिकवैभाषिकाभ्यामात्मविषये योगाचारमतस्य क्षणिकविज्ञानस्यैव स्वीकारः । तथा शरीरेन्द्रियादिसंघातात्मवादिना चार्वाकेणापि शरीरगुणस्य ज्ञानस्य क्षणिकत्वस्वीकारेण योगाचारमतस्यैव स्वीकारः । मीमांसकेन प्रभाकरेणात्मविषये वैशेषिकमतस्यैव स्वीकारः । सांख्ययोगानुसारिभिस्तु-वेदान्तिवत् शुद्धबुद्ध मुक्तस्वरूपस्य चतुष्कोटिविनिर्मुक्तस्यैवात्मनः स्वीकारः कृतः तस्मादात्मविषये चतस्रः कोट्यः नैयायिकादीनाम् । पञ्चमी तु–नित्यस्वप्रकाशरूपात्मेति वेदान्तिनः कोटिः इत्यात्मविषये पञ्चैव कोट्य इति न कश्चिद्विरोध इति ।

अत्रेदमपि विचारणीयं यत्—नास्ति नास्तीति चतुर्थी शून्यवादिकोटिः तया विनिर्मुक्तः तथा स्थिररूपया क्षणिकविज्ञानवादिकोट्या विनिर्मुक्तः नित्यस्वप्रकाशरूप आत्मेतिवदद्भिर्वेदान्तिभिस्सह शून्यवादिनः क्षणिक-

विज्ञानवादिनश्च कथं मतैक्यं भवेदिति । तदेतत्खण्डने प्रथमपरिच्छेदे लाजर्संमुद्रणालये मुद्रिते ७६ पृष्टे स्पष्टमुक्तम् "एवञ्च सति सौगतब्रह्म-वादिनोरयं विशेषो यदादिमः सर्वमेवानिर्वचनीयं वर्णयति । तदुक्तम्—भगवता लङ्कावतारे—

बुद्ध्या विविच्यमानानां स्वभावो१नावधार्यते ।
अतो निरभिलप्यास्ते निःस्वभावाश्च देशिताः ॥

इति, विज्ञानव्यतिरिक्तं पुनरिदं विश्वं सदसद्भ्यां विलक्षणं ब्रह्म-वादिनः संगिरन्ते" इति ग्रन्थेन ।

यत्तु—माध्यमिककारिकायां तत्त्वमित्यस्य परमार्थतत्त्वम् आत्मतत्त्वम् । इति व्याख्यानम्-तन्न वरं सर्वं शून्यम् = सर्वम् = बाह्यमाध्यात्मिकं च जडं तथा चेतन आत्मा च शून्यमिति वदतो माध्यमिकस्य आत्ममात्रस्य शून्यत्वप्रतिपादने मतहानिः स्यात् । तथा सति आत्मव्यतिरिक्तस्य सर्वस्यासत्यत्वप्रसङ्गादिति । किञ्च-बुद्ध्या विविच्यमानानामिति खण्ड-नोद्धृतलङ्कावतारीयवचनेन सहैकवाक्यतया तत्त्वपदेन सर्वस्यैव वस्तुनः ग्रहणस्यौचित्यात् ।

बुद्धमतप्रसिद्धानां बुद्धसंवृतादिशब्दानां प्रयोगमात्रान्न कथमपि मतैक्यं सम्भवति । तथा सति हिन्दीभाषायां बहुशः अरबी फारसी-

---

टि०(१) बुद्ध्येति । बुद्ध्या विविच्यमानानाम् = विचार्यमाणानां बाह्या-ध्यात्मिकदृश्यानाम्, आत्मनश्च स्वभावः = स्वरूपं नावधार्यते = न निश्चीयते अतः कारणात् निरभिलप्या = अनिर्वचनीया निःस्वभावाः = स्वभावशून्या देशिता = बुद्धैरेवोपदिष्टा इति ।

शब्दानां तथा—इंग्लिश्शब्दानां प्रयोगात् तद्भाषिणामपि मतैक्यं स्यादिति अन्यमतप्रयुक्तानां शब्दानामन्यमते आदानस्य प्रयोजनानुसारेण सम्भवादिति ।

## श्रीगौडपादाचार्या अजातवादिनः—

तत्र भवन्तो गौडपादाचार्याः अजातवादिनः इति अद्वैतवेदान्तिनः प्रवदन्ति । अत्र च प्रमाणम्—

स्वप्नमाये यथादृष्टे गन्धर्वनगरं यथा ।
तथा विश्वमिदं दृष्टं वेदान्तेषु विचक्षणैः ॥

गौ० अ० २ का० ३१

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥

गौ० अ० २ का ३२

इति वैतथ्यप्रकरणीयकारिके, तथा—

प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ।
मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥

गौ० अ० १ का १७

इत्यागमप्रकरणीयकारिकाञ्च उद्धरन्ति ।

ननु असतः शशश्रृङ्गादेः शुक्तिरजतस्य स्वाप्नस्य प्रपञ्चस्य चानिर्वचनीयस्य स्पष्टं भेदः प्रतीयते । तानि शशश्रृङ्गादीनि हि चाक्षुषाणि न भवन्ति । अनिर्वचनीयानि शुक्तिरजतादीनि तु भवन्ति । अत एव—आचार्यचरणैरपि—

"विपर्यासाद् यथा जाग्रदचिन्त्यान्भूतवत्स्पृजेत् ।
तथा स्वप्ने विपर्यासाद्धर्मांस्तत्रैव पश्यति ॥"

( गौ० अ० ४ का० ४१ ) इति कारिकया तथा—

न निर्गतास्ते विज्ञानाद् द्रव्यत्वाभावयोगतः ।
कार्यकारणताऽभावाद् यतोऽचिन्त्याः सदैव ते ॥

( गौ० अ० ४ का ५२ ) कारिकया,

उभे ह्यन्योन्यं दृश्येते किन्तदस्तीति नोच्यते ।
लक्षणाशून्यमुभयं तन्मतेनैव गृह्यते ॥

( गौ० अ० ४ का० ६७ ) कारिकया च अनिर्वचनीयवादोऽपि प्रादर्शि। कथमजातवादिनस्ते आचार्या इति चेत्सत्यम् । "असङ्गोऽह्ययं पुरुषः" इति श्रुत्यर्थविरोधेन अनिर्वचनीयवादस्याभ्युपगमसिद्धान्तविषयत्वात् । अजातवादस्यैव वेदान्तरहस्यत्वात् । तदेतत्पञ्चदश्याम्—

"तुच्छाऽनिर्वचनीया च वास्तवी चेत्यसौ त्रिधा ।
ज्ञेया माया त्रिभिर्बोधैः श्रौतयौक्तिकलौकिकैः ॥

इति कारिकया साधु विवेचितम् । वस्तुदृष्ट्या तु-गौडपाद ( का० ४।४१ ) कारिकायां भूतवदिति दृष्टान्तानुरोधेन अचिन्त्यानित्यस्य अभूतान् = असत इत्येवार्थः । तथा (गौ० ४।६७) कारिकायामपि प्रकरणानुसारेण किन्तदस्तीत्यस्य अभूतमित्येवार्थ इति सुष्ठु प्रतिभाति । तदेतदाचार्यचरणैः प्रतिपादितम्—

अजेष्वजमसंक्रान्तं धर्मेषु ज्ञानमिष्यते ।
यतो न क्रमते ज्ञानमसङ्गं तेन कीर्तितम् ॥

(गौ० ४.९६) कारिकायामिति । सोऽयमजातवादः—

न कश्चिज्जायते जीवः सम्भवोऽस्य न विद्यते ।
एतत्तदुत्तमं सत्यं यत्र किंचिन्न जायते ॥

(गौ० ३।४।) इति "न कश्चिज्जायते जीवः" इति (गौ० ४।७१) कारिकाभ्यां स्पष्टमाचार्यैः प्रतिपादितः। नचानयोर द्वैतप्रकरणस्थालातशान्तिप्रकरणस्थकारिकयोः पौनरुक्त्यं शङ्क्यम्। शब्दसाम्येऽप्यर्थभेदात्। तथाहि-अद्वैतप्रकरणीयकारिकायां जीवपदेन घटाकाशवदन्तः करणावच्छिन्नः चेतनो विवक्ष्यते—

आत्मा ह्याकाशवज्जीवैर्घटाकाशैरिवोदितः ।
घटादिवच्च संघातैर्जातावेतन्निदर्शनम् ॥

(गौ० ३।३) इति कारिकया तस्यैवोपक्रमात्।

स च नित्य इति तस्य जन्मनिषेधः सम्यगेव। तथा—अलातप्रकरणे जीवपदेन स्थूलशरीरं विवक्ष्यते।

स्वप्नदृक् प्रचरन् स्वप्ने दिक्षु वै दशसु स्थितान्।
अण्डजान् स्वेदजान् वाऽपि जीवान्पश्यति यान्सदा॥

(गौ० ४.६३।) इति कारिकायां तस्यैवोपक्रमात्। स्वपन् हि पुरुषः स्वप्ने स्थूलशरीरमेव पश्यति। तस्य च—

संघाताः स्वप्नवत्सर्वे आत्ममायाविसर्जिताः।
आधिक्ये सर्वसाम्ये वा नोपपत्तिर्हि विद्यते ॥

(गौ० ३।१०।) इति कारिकयाऽसत्त्वाभिधानात्! असतश्च जन्म-सम्भवात्। नहि शशशृङ्गं जायते। इति तस्य स्थूलशरीरस्य जन्माभाव-कथनं सम्यगेव।

यत्त्वत्रान्वेषिण इंग्लिशविद्वांसः अथमजातवादः वेदान्तिनां न स्वस-

त्पत्तिः किन्तु-गौड़पादादपि प्रचीनस्य दिङ्नागस्य बौद्धाचार्यस्य माध्यमिकवृत्तौ तथा दिङ्नागादपि प्राचीनेषु पालीभाषासु प्रणीतबौद्धग्रन्थेषु च समुपलब्धेस्ततो गृहीत इति वदन्ति । तदपि पालीभाषापेक्षयापि सर्वैरपि प्राचीनत्वेन संप्रतिज्ञाया वेदसंहिताया उपनिषदां भगवद्गीतायाश्चानालोचननिबन्धनम् । संहितायां हि 'अजायमानो बहुधा व्यजायत' इति मन्त्रो दृश्यते । तस्य च वस्तुत अजायमानः-अजातः = मायया व्यजायत = जात इव उपलभ्यत इत्यर्थः । एवम् 'कोन्वेनं जनयेदिति, 'नायं कुतश्चिन्न बभूव कश्चित्, 'इत्याद्युपनिषत्सु ' 'नासतो विद्यते भावः'' इति गीतायाञ्च अजातवादस्य स्पष्टं प्रतिपादनादिति ।

प्राच्यप्रतीच्यविदुषां तत्त्वान्वेषणचेतसाम् ।
मानसे चिन्तनालोकः प्राप्यते प्रेमतोऽधुना ।

चण्डीप्रसादशुक्लशर्म्मणा
जो० म० गोयनका सं० महाविद्यालय,
ललिताघाट, बनारस ।



